# शालग्रामस्तोत्रम्

श्रीरामं सह लक्ष्मणं सकरुणं सीतान्वितं सात्त्विकं
वैदेहीमुखपद्मलुब्धमधुपं पौलस्त्वसंहारिणम् ।
वन्दे वन्द्यपदांबुजं सुरवरं भक्तानुकंपाकरं
शत्रुघ्नेन हनूमता च भरतेनासेवितं राघवम् ॥ १॥

जयति जनकपुत्री लोकभर्त्री नितान्तं
जयति जयति रामः पुण्यपुञ्जस्वरूपः ।
जयति शुभगराशिर्लक्ष्मणो ज्ञानरूपो
जयति किल मनोज्ञा ब्रह्मजाता ह्ययोध्या ॥ २॥

श्री गणेशाय नमः ।
अस्य श्रीशालग्रामस्तोत्रमन्त्रस्य श्रीभगवान् ऋषिः,
नारायणो देवता, अनुष्टुप् छन्दः,
श्रीशालग्रामस्तोत्रमन्त्रजपे विनियोगः ॥

युधिष्ठिर उवाच ।
श्रीदेवदेव देवेश देवतार्चनमुत्तमम् ।
तत्सर्वं श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम ॥ १॥

श्रीभगवानुवाच ।
गण्डक्यां चोत्तरे तीरे गिरिराजस्य दक्षिणे ।
दशयोजनविस्तीर्णा महाक्षेत्रवसुन्धरा ॥ २॥

शालग्रामो भवेद्देवो देवी द्वारावती भवेत् ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ ३॥

शालग्रामशिला यत्र यत्र द्वारावती शिला ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ ४॥

आजन्मकृतपापानां प्रायश्चित्तं य इच्छति ।
शालग्रामशिलावारि पापहारि नमोऽस्तु ते ॥ ५॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥ ६॥

शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।

अङ्गलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत् ॥ ७॥

स्नानोदकं पिवेन्नित्यं चक्राङ्कितशिलोद्भवम् ।
प्रक्षाल्य शुद्धं तत्तोयं ब्रह्महत्यां व्यपोहति ॥ ८॥

अग्निष्टोमसहस्राणि वाजपेयशतानि च ।
सम्यक् फलमवाप्नोति विष्णोर्नैवेद्यभक्षणात् ॥ ९॥

नैवेद्ययुक्तां तुलसीं च मिश्रितां विशेषतः पादजलेन विष्णोः ।
योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ १०॥

खण्डिताः स्फुटिता भिन्ना वन्हिदग्धास्तथैव च ।
शालग्रामशिला यत्र तत्र दोषो न विद्यते ॥ ११॥

न मन्त्रः पूजनं नैव न तीर्थं न च भावना ।
न स्तुतिर्नोपचारश्च शालग्रामशिलार्चने ॥ १२॥

ब्रह्महत्यादिकं पापं मनोवाक्कायसम्भवम् ।
शीघ्रं नश्यति तत्सर्वं शालग्रामशिलार्चनात् ॥ १३॥

नानावर्णमयं चैव नानाभोगेन वेष्टितम् ।
तथा वरप्रसादेन लक्ष्मीकान्तं वदाम्यहम् ॥ १४॥

नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा ।
तथा वरप्रसादेन लक्ष्मीकान्तं वदाम्यहम् ॥ १५॥

कृष्णे शिलातले यत्र सूक्ष्मं चक्रं च दृश्यते ।
सौभाग्यं सन्ततिं धत्ते सर्व सौख्यं ददाति च ॥ १६॥

वासुदेवस्य चिह्नानि दृष्ट्वा पापैः प्रमुच्यते ।
श्रीधरः सुकरे वामे हरिद्वर्णस्तु दृश्यते ॥ १७॥

वराहरूपिणं देवं कूर्माङ्गैरपि चिह्नितम् ।
गोपदं तत्र दृश्येत वाराहं वामनं तथा ॥ १८॥

पीतवर्णं तु देवानां रक्तवर्णं भयावहम् ।
नारसिंहो भवेद्देवो मोक्षदं च प्रकीर्तितम् ॥ १९॥

शङ्खचक्रगदाकूर्माः शङ्खो यत्र प्रदृश्यते ।
शङ्खवर्णस्य देवानां वामे देवस्य लक्षणम् ॥ २०॥

दामोदरं तथा स्थूलं मध्ये चक्रं प्रतिष्ठितम् ।
पूर्णद्वारेण सङ्कीर्णा पीतरेखा च दृश्यते ॥ २१॥

छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः ।
चिपिटे च महादुःखं शूलाग्रे तु रणं ध्रुवम् ॥ २२॥

ललाटे शेषभोगस्तु शिरोपरि सुकाञ्चनम् ।
चक्रकाञ्चनवर्णानां वामदेवस्य लक्षणम् ॥ २३॥

वामपार्श्वे च वै चक्रे कृष्णवर्णस्तु पिङ्गलम् ।
लक्ष्मीनृसिंहदेवानां पृथग्वर्णस्तु दृश्यते ॥ २४॥

लम्बोष्ठे च दरिद्रं स्यात्पिङ्गले हानिरेव च ।
लग्नचक्रे भवेद्याधिर्विदारे मरणं ध्रुवम् ॥ २५॥

पादोदकं च निर्माल्यं मस्तके धारयेत्सदा ।
विष्णोर्द्दष्टं भक्षितव्यं तुलसीदलमिश्रितम् ॥ २६॥

कल्पकोटिसहस्राणि वैकुण्ठे वसते सदा ।
शालग्रामशिलाबिन्दुर्हत्याकोटिविनाशनः ॥ २७॥

तस्मात्सम्पूजयेद्ध्यात्वा पूजितं चापि सर्वदा ।
शालग्रामशिलास्तोत्रं यः पठेच्च द्विजोत्तमः ॥ २८॥

स गच्छेत्परमं स्थानं यत्र लोकेश्वरो हरिः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ २९॥

दशावतारो देवानां पृथग्वर्णस्तु दृश्यते ।
ईप्सितं लभते राज्यं विष्णुपूजामनुक्रमात् ॥ ३०॥

कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः ।
ताः सर्वा नाशमायान्ति विष्णुनैवेद्यभक्षणात् ॥ ३१॥

विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् ।
तस्मादष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥ ३२॥

रघुवर! यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुर्यस्य चैद्यस्य कृष्ण! ।
प्रतिभवमपराद्धुर्मुग्धसायुज्यदोभूर्-
वद किमु पदमागस्तस्य तेऽस्तिक्षमायाः ॥ १॥

मह्यं मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीय मदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २॥

। इति श्रीभविष्योत्तरपुराणे श्रीकृष्णयुधिष्ठिरसंवादे
शालग्रामस्तोत्रं सम्पूर्णम् ।